'मास्टर' मणिमालाया एकोनपञ्चाशत्संख्यको मणिः ( कर्मकाण्डविभागे १३ )

अथ

# शिलान्यास-देहलीन्यासपद्धतिः

प्रारभ्यते ।

पं० श्रीवायुनन्दनमिश्रप्रणीता ।

मूल्यम् =)॥

‘मास्टर’ मणिमालाया एकोनपञ्चाशन्मणिस्त्वेषः । श्रीविश्वेशपदेभ्यः सादरमादौ समर्प्यंते भक्त्या ॥



## ❀ अथ शिलान्यास सम्भाराः ❀

।) केशर
)॥ रोरी
)॥ नारा
—) अबीर
)। बुक्का
)। मेंहदी की बुकनी
)। हरदी की बुकनी
—) सर्वौषधी
)। पीली सरसों
=) मालाफूल
)॥ धूपवत्ती
दीपवत्ती २५
)॥ कपूर
पेड़ा ऽ॥
बतासा ऽ।
लेडुआ ऽ५

।) ऋतुफल
पान १००
सोपाड़ी ऽ१।
)। सिन्दूर
नारियल ३
कमण्डल १
पीढ़ा २
चौकी १
प्रधानकलश तांवेका १
११ पीतल का १
तांवे का कलशा ५
तांवे की कटोरी ६
पञ्चपल्लव
सप्तमृत्तिका
सप्तधान्य ऽ१।
पञ्चरत्न ८

सोने का टुकड़ा ५
—) परा
चाँदी का टुकड़ा ५
तीर्थजल
हाथीदंत मट्टी
हलकी मट्टी
वृषशृंगोदक
नाग सोने का १
)। लावा
)। सतुआ
दही ऽ।
दूध ऽ१।
शहद ऽ—
गोमूत्र
गोबर
उड़दी ऽ।

घीव ऽ१।
तिल्ली ऽ५
कटोरा १
पूर्णपात्र १
थाली १
अर्घा १
वरणी ८
शिला ५
आधारशिला ५
तूल १। गज
५ वस्त्र चढ़ानेको
१ धोती डुपट्टा
५ गज सफेदवस्त्र
=) पलाश की
लकड़ी
इति सम्भाराः।

# भूमिका

कर्मकाण्ड के ग्रन्थों में शिलान्यास पद्धति तथा देहलीन्यास पद्धति का एकमात्र अभाव था। अतः मैंने कर्मकाण्ड के जिज्ञासुओं के उपकारार्थ ग्रन्थों के अनुकूल अत्यन्त सरल रीति से इसकी रचना की। यदि कर्मकाण्डी लोग इसे अपने उपयोग में लाकर जनता का उपकार करेंगे तो मैं अपने को कृतकृत्य मानूँगा।

मध्यमेश्वर, काशी। { वायुनन्दन मिश्र अग्निहोत्री।

श्रीगणेशाय नमः ॥ आचम्य प्राणानायम्य ॥ ॐ पवित्रेस्थोव्वैष्णव्यौ सवितुर्व्वः प्रसवऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्य्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ इति पवित्रधारणं कृत्वा ॥ ॐ अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपिवा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं पूजासामग्रीं च संप्रोक्ष्य ॥ हस्ते अक्षतपुष्पाणि गृहीत्वा आनोभद्रादीन्मङ्गलमंत्रान्सुमुखश्चैकदंतश्चेत्यादिश्लोकान्पठेत् ॥ ततो यथाशक्ति शरीरशुद्ध्यर्थं प्रायश्चित्तं कुर्यात् ॥ तत्र सङ्कल्पः ॥ देशकालौ संकीर्त्य० गोत्रः शर्माहं शिलान्यासकर्माधिकारार्थं यथाशक्ति गोनिष्क्रयभूतं द्रव्यं रजतं चन्द्रदैवतं

 

यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृजे ॥ प्रार्थना ॥ गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ॥ गावो मे हृदयः सन्तु गवां मध्ये वसाम्यहम् ॥ देशकालौ संकीर्त्य० गोत्रः शर्माहं करिष्यमाणवास्तोः शुभतासिध्यर्थं भूमिपूजन-पूर्वकं शिलान्यासं च करिष्ये ॥ तदंगत्वेन स्वस्तिपुण्याह-वाचनं मातृकापूजनं वसोर्द्धारापूजनं आयुष्यमंत्रजपं नांदी-श्राद्धं आचार्यादिवरणानि च करिष्ये ॥ तत्रादौ निर्विघ्नता-सिध्यर्थं गणेशाम्बिकयोः पूजनं च करिष्ये ॥ गणेशपूजना-दारभ्य आचार्यादिवरणान्तं ग्रहशान्त्यनुसारेण कुर्यात् ॥ ततो आचार्यः आचम्य प्राणानायम्य शरीरशुध्यर्थं पुरुषसूक्तं सकृत् जपेत् ॥ पीतसर्षपान्गृहीत्वा दिग्रक्षणं कुर्यात् ॥ तत्र

 

मंत्रः ॥ यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा ॥ स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥ अपसर्पन्तु ते भूता ये भूता भूमिसंस्थिताः ॥ ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया । अपक्रामन्तु भूतानि पिशाचाः सर्वतो दिशः । सर्वेषामविरोधेन न्यासकर्म समारभे ॥ भूतानि राक्षसा वापि येऽत्र तिष्ठन्ति केचनते सर्वेऽप्यपगच्छन्तुन्यासकर्म करोम्यहम्॥ इति तिष्ठन् चतुर्दिक्षु विकिरेत् ॥ आदौ ताः पंचशिला भद्रपीठे न्यसेत् ( स्थापयेत् ) शंकुं च न्यसेत् ( शंकुप्रमाणम्—स्निग्धा-धिभूभागसमुत्थितानां न्यग्रोधबिल्वद्रुमखादिराणाम् ॥ शमीवटोदुम्बरदेवदारुक्षीरस्वदेशोत्थफलद्रुमाणाम्॥ शंकुं प्रगृह्याशुकरप्रमाणं करार्द्धमानं मुनिभिः प्रदिष्टम् ॥ शुद्धोदकेन

शि.
२

प्रक्षाल्य ॥ ॐ अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्याऽअयम् । अपाᳬ रेताᳬसि जिन्वति ॥ इति शिलासु मृदा विलिप्य ॥ ॐ यज्ञा यज्ञा वो अग्नये गिरा गिरा च दक्षसे ॥ प्रवयममृतं जातवेदसंप्रियं मित्रं न संशिषम् । इति जलेन संस्नाप्य ॥ ॐ अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाजऽइत्किलासथ यत्सनवथ पूरुषम् ॥ इति कषायेन संस्नाप्य ॥ गायत्र्या गोमूत्रेण संस्नाप्य । ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ इति गोमयेन स्नापयेत् ॥ ॐ पयः पृथिव्यां पयऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ इति क्षीरेण स्नापयेत् ॥ ॐ दधिक्राव्णो-

प.
२

ऽअकारिषञ्जिष्णोरश्वस्य वाजिनः ॥ सुरभिनो मुखाकरत्प्रणाऽ-
आयूᳬंषि तारिषत्। इति दधिना स्नापयेत् ॥ ॐ घृतं मिमिक्षे
घृतमस्य योनिर्घृते श्रितो घृतम्बस्यधाम ॥ अनुष्वधमा
वहमादयस्व स्वाहा कृतं वृषभव्वक्षिहव्यम् इत्याज्येन
संस्नाप्य । ॐ मधुव्वाताऽऋतायते मधु क्षरन्ति सिन्धवः ॥
माध्वीर्न्नः सन्त्वोषधीः ॥ १ ॥ मधु नक्तमुतोषसो मधु-
मत्पार्थिवᳬं रजः ॥ मधु द्यौरस्तु न पिता ॥ २ ॥ मधु-
मान्नो वनस्पतिर्म्मधुमाँऽअस्तु सूर्य्यः । माध्वीर्ग्गावो भवन्तु
नः ॥३॥ इतिमधुना स्नापयेत् ॥ ॐ अपाᳬं रसमुद्वयसᳬं
सूर्य्ये सन्तᳬं समाहितम् । अपाᳬं रसस्य यो रसस्तं व्वो
गृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वा जुष्टंगृह्णाम्येषते योनि-

शि. ३

रिन्द्रायत्वा जुष्टतमम् ॥ इति शर्करया स्नापयेत् ॥ ॐ पञ्च-
नद्यः सरस्वतीमपि यन्ति सस्रोतसः ॥ सरस्वती तु पञ्चधा
सोदेशेऽभवत्सरित् ॥ इति मिलितपंचामृतेन स्नापयेत् ॥ ॐ
देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम् ॥
इति कुशोदकेन स्नापयेत् ॥ ॐ काण्डात्काण्डात्प्ररोहन्ती
परुषः परुषस्परि ॥ एवानोदूर्व्वे प्रतनु सहस्रेण शतेन च
इति दूर्वोदकेन स्नापयेत् ॥ ॐ गन्धद्वारां दुराधर्षां नित्यपुष्टां
करीषिणीम् । ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥
इति गंधोदकेन स्नापयेत् । ॐ याऽओषधीः पूर्वा जाता देवे-
भ्यस्त्रियुगम्पुरा ॥ मनैन्नु बभ्रूणामहꣳ शतं धामानि सप्त
च ॥ इति सर्वौषधीजलेन स्नापयेत् ॥ ॐ याः फलिनीर्या

प. २

ऽअफला ऽअपुष्पायाश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वर्ठ० हसः ॥ इति फलोदकेन स्नापयेत् ॥ ॐ नमस्ते रुद्रमन्यवऽउतोतऽइषवे नमः ॥ बाहुभ्यामुत ते नमः ॥ इति वृषभृङ्गोदकेन स्नापयेत् । वृषभृङ्गेन मृदा वा ॐ धान्यमसि धिनुहि देवान्प्राणाय त्वोदानाय त्वा व्यानाय त्वा दीर्घामनुप्रसितिमायुषेधान्देवोवः सविता हिरण्यपाणिः प्रतिगृभ्णात्वच्छिद्रेण पाणिना चक्षुषे त्वा महीनाम्पयोसि ॥ इति धान्योदकेन स्नापयेत् ॥ ॐ यवोसि यवयास्मद्द्वेषो यवयारातीः ॥इति यवोदकेन स्नापयेत्॥ॐ तिलोसि सोमदैवत्यो गोसवो देवनिर्मितः ॥ प्रत्नमाद्भिः पृक्तः स्वधया पितॄंल्लोकान्प्रीणाहि नः स्वाहा ॥ इति तिलोदकैः

स्नापयेत् ॥ ॐ पंचनद्योति नदीजलैः स्नापयेत् ॥ ॐ इमम्मे वरुण श्रुधी हवमद्या च मृडय ॥ त्वामवस्युराचके॥इति तीर्थोदकैः स्नापयेत्॥ ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवी मनु ॥ येऽन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ इति गजदंतमृत्तोयैः स्नापयेत् ॥ ॐ स्योनापृथिवि नो भवानृक्षरा न्निवेशनी ॥ यच्छानः शर्म्म सप्रथाः ॥ इति फालकृष्टमृदुदकेन स्नापयेत् ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातपतिरेकऽआसीत् । सदाधार पृथिविन्द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ इति सुवर्णोदकेन स्नापयेत् ॥ रूपेण वो रूपमभ्यागान्तुथो वो विश्ववेदा विभजतु॥ऋतस्य

यथाऽप्येत चन्द्रं दक्षिणा विश्वः पश्य व्यन्तरिक्षं यतस्वदस्यैः॥
इति रौप्योदकेन स्नापयेत् ॥ ॐ युवा सुवासाः परिवीतऽ-
आगात्स ऽउ श्रेयान्भवति जायमानः ॥ तन्धीरासः कवयऽ-
उन्नयन्ति स्वाध्यो मनसा देवयन्तः ॥ इति वस्त्रजैर्जलैः
स्नापयेत् ॥ ॐ शुद्धवालः सर्व शुद्धवालो मणिवालस्त
ऽआश्विनाः श्येतः श्येताक्ष्योरुणास्ते रुद्राय पशुपतये
कर्णायामा ऽअवलिप्ता रौद्रा नमो रूपाः पार्ज्जन्न्याः ॥
इति शुद्धोदकेन स्नापयित्वा ॥ ताः शिलाः कुंकुम—चन्द-
नाभ्यां विलिप्य वस्त्रेणाच्छाद्य नामभिः पूजयेत् ॥ तत्र
नामानि ॥ नंदा भद्रा जया रिक्ता पूर्णा नामा यथाक्रमम् ॥
नंदायां पद्ममालिख्य भद्रा सिंहासनं तथा ॥ जयायां तोरणं

छत्रं रिक्तायां कूर्ममेव च ॥ पूर्णायां तु चतुर्बाहुं विष्णुं संलेखयेद्बुधः ॥ ब्रह्मा विष्णुश्च रुद्रश्च ईश्वरश्च सदाशिवः ॥ एते पंचैव पंचेषु भूतानामावहयेत्पुनः ॥ ॐ ब्रह्मणे नमः ब्रह्माणं० ॥ ॐ विष्णवे० विष्णुं० ॥ ॐ रुद्राय० रुद्रं० ॥ ॐ ईश्वराय० ईश्वरं ॥ ॐ सदाशिवाय० सदाशिवं ॥ इति नाम मंत्रः ॥ ब्रह्मादीन्पूजयेत्तत्र नाममंत्रेण वा तथा ॥ उपचारैः षोडशभिर्मूलमध्यशिरस्वपि ॥ स्नपनं चाभिषेकं तु वेदमंत्रश्च कारयेत् ॥ ॐ आ ब्रह्मन्ब्राह्मणो ब्रह्मवर्च्चसी जायतामा राष्ट्रे राजन्न्यः शूर ऽइषव्योतिव्याधी महारथो जायतान्दोग्ध्री धेनुर्व्वोढानड्वानाशुः सप्तिः पुरन्ध्रिर्य्योषा जिष्णूः रथेष्ठा सभेयो युवास्य यजमानस्य वीरो जायतान्नि-

कामे निकामे नः पर्ज्जन्यो वर्षतु फलवत्यो नऽ ओषधयः पच्यन्तां योगक्षेमो नः कल्प्यताम् ॥ इति नंदायाम् ॥ ॐ भद्रं कर्णेभिः इति भद्रायाम् ॥ ॐ जातवेदसे सुनवामसो ममरातीयतो निदहाति वेदः ॥ स नः पर्षदति दुर्गाणि विश्वा नावेव सिन्धुन्दुरितात्यग्निः ॥ इति जयायां ॥ ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा धर्माय स्वाहा धर्मः पित्रे ॥ इति रिक्तायाम् ॥ ॐ पूर्णादर्व्वि परापत सुपूर्णा पुनरापत ॥ व्वस्तेव विक्रीणावहाऽइषमूर्ज᳖ शत-क्रतोः ॥ इति पूर्णायाम् ॥ इति पूजनम् ॥ ॐ नाभिर्म्मे चित्तं व्विज्ञानम्पायुर्म्मे पचितिर्भसत् ॥ आनन्दनन्दावाण्डौ मे भगः सौभाग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यान्धर्म्मोस्मि व्विशि

शि. ६

राजा प्प्रातिष्ठितः ॥ ॐ ब्रह्म यज्ञानं प्प्रथमं पुरस्ताद्विशी-
मतः शुरूचो व्वेन ऽआवः सवुध्न्या उपमा अस्य विष्ठाः
शतश्च योनिमसतश्च व्वि वः ॥ ॐ विष्णो रराटमसि
व्विष्णोः श्नप्त्रे स्थो व्विष्णोः स्यूरसि व्विष्णोर्ध्रुवोसि ॥
व्वैष्णवमसि व्विष्णवे त्वा ॐ नमस्ते रुद्रमन्यव उतोतऽ
इषवे नमः ॥ बाहुब्भ्यामुत ते नमः॥ ॐ इमं देवा ऽअस-
पत्नꣳ सुवद्ध्वं म्महते त्त्राय महते ज्यैष्ठ्याय महते जानराज्या-
येन्द्रस्येंद्रियाय॥इमममुष्यपुत्रममुष्यै पुत्रमस्यै विश ऽएषवोमी
राजा सोमोऽस्माकं ब्राह्मणानाꣳराजा॥ एभिर्पञ्चभिर्मन्त्रैर-
भिषेकः॥ ततो कुम्भनामानि पद्म १ महापद्म २ शंखं
३ विजयं ४ सर्वतोभद्रं ५॥ कलशस्थापनाविधिना सर्वान्क-

प. ६

लशान्नन्दादि पार्श्वे स्थाप्याः ॥ तत्रावाहनं पूजनं नाममं-
त्रेण ॥ तद्यथा ॥ ॐ पद्माय नमः पद्ममा० ॥ ॐ महा-
पद्माय० महापद्मं ॥ ॐ शंखाय० शंखं० ॥ ॐ विजयाय
विजयमा० ॥ ॐ सर्वतोभद्राय० सर्वतोभद्रं० ॥ इति ॥
ततोऽग्निं प्रतिष्ठाप्य ॥ ईशान्यां नवग्रहादिरुद्रकलशं च स्थापनं
पूजनं च कृत्वा ॥ कुशकण्डिकां विधायाघारावाज्यभागौ
हुत्वा ग्रहाहुतिं कृत्वा प्रधानहोमं कुर्यात् ॥ तद्यथा ॥ ॐ
त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्द्धनम् ॥ उर्व्वारुकमिव
बन्धनान्मृत्योर्मुक्षीयमामृतात् १०८ ॥ ततो नंदा-भद्रा-जया-
रिक्ता-पूर्णा-नामष्टाविंशतिसंख्यया वेदमंत्रेण होमं कुर्यात् ॥
पद्म-महापद्म-शंख-विजय-सर्वतोभद्राणां एकैकयाज्या

हुत्वा ॥ ततोऽग्निपूजनम् ॥ ॐ अग्ने नय सुपथा राये ऽअस्मान्विश्वानि देव व्वयुनानि विद्वान् ॥ युयुद्ध्यस्म ज्जुहुराणमेनो भूयिष्ठान्ते नम ऽउक्तिं विधेम ॥ अग्नेर्वैश्वानराय नम इति संपूज्य ॥ ब्रह्मणान्वारब्धः ॐ अग्नये स्विष्टकृते स्वाहा इदमग्नये स्विष्टकृते न मम ॥ ॐभूः स्वाहा इदमग्नये० ॥ ॐभुवः स्वाहा इदं वायवे० ॥ ॐस्वः स्वाहा इदं सूर्याय० ॥ ॐ त्वन्नो ऽअग्ने० । इदं वरुणाय० ॥ ॐ सत्वन्नो ऽअग्ने० ॥ इदं वरुणाय० ॥ ॐ अयाश्चाग्ने० ॥ इदं अग्नये अयसे० ॥ ॐ ये ते शतं० ॥ इदं वरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भ्यः श्वर्केभ्यश्च न मम ॥ ॐ उदुत्तमं० ॥ इदं वरुणायादित्यायादितये० ॥

ॐ प्रजापतये स्वाहा ॥ इदं प्रजापतये० ॥ दिक्पालेभ्यो बलिं दद्यात् ॥ ॐ प्राच्यै दिशे स्वाहाऽर्वाच्यै दिशे स्वाहा दक्षिणायै दिशे स्वाहार्वाच्यै दिशे स्वाहा प्रतीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोदीच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहोर्द्ध्वायै दिशे स्वाहार्वाच्यै दिशे स्वाहार्वाच्यै दिशे स्वाहा ॥ इन्द्रादिदशदिक्पालेभ्यो एतान्सदीपदधिमाषभक्तबलीन्स० । भो भो इन्द्रादिदशदिक्पाला मम सकुटुम्बस्य सपरिवारस्य गृहे आयुः कर्तारः शांतिकर्तारः पुष्टिकर्तारः तुष्टिकर्तारः वरदा भवत। अनेन बलिदानेन इन्द्रादि दशदिक्पालाः प्रीयन्ताम् ॥ क्षेत्रपालाय नमः इति सम्पूज्य ॥ प्रार्थयेत् ॥ नमो वै क्षेत्रपालस्त्वं भूतप्रेतगणैः सह ॥ पूजां

बलिं गृहाणेदं सौम्यो भवतु सर्वदा ॥ पुत्रान्देहि धनं देहि सर्वान्कामांश्च देहि मे ॥ आयुरारोग्यं मे देहि निर्विघ्नं कुरु सर्वदा ॥ क्षेत्रपालाय साङ्गाय० । अनेन बलिदानेन क्षेत्रपालः प्रीयताम् ॥ अथ पूर्णाहुतिः ॥ मूर्द्धानं दिवोऽअ-रतिं पृथिव्या वैश्वानरमृत ऽआजातमग्निम् ॥ कवि᳭ सम्म्राजमतिथिं जनानामासन्नापात्रं जनयन्त देवाः ॥ पूर्णा दर्वि परापत सुपूर्णा पुनरापत ॥ व्वस्नेव व्विक्रीणावहाऽ-इषमूर्ज्ज᳭ शतक्रतो स्वाहा ॥ इदमग्नये वैश्वानराय ॥ ॐ वसोः पवित्रमसि शतधारं वसोः पवित्रमसि सहस्रधारम् ॥ देवस्त्वा सविता पुनातु वसोः पवित्रेण शतधारेण सुप्त्वा कामधुक्षः स्वाहा ॥ इदमग्नये वैश्वानराय० ॥ इति

वसोर्द्धारां जुहुयात् ॥ ॐ त्र्यायुषं जमदग्नेः ललाटे कश्यपस्य त्र्यायुषमिति ग्रीवायां॥यद्देवेषु त्र्यायुषमिति दक्षिणबाहुमूले॥ तन्नोऽ अस्तु त्र्यायुषमिति हृदि ॥ संस्रवप्राशनम् ॥ आचमनम् ॥ पवित्राभ्यां प्रणीतोदकेन मार्जनम् ॥ ब्रह्मणे पूर्णपात्रदानम् ॥ कृतस्य शिलान्यासकर्मणः इदं पूर्णपात्रं ब्रह्मणे तुभ्यमहं सम्प्रददे ॥ ऐशान्यां प्रणीता विमोकः ॥ ॐ आपः शिवाः शिवतमाः शांताः शांततमास्तास्ते कृण्वन्तु भेषजम् ॥ उपयमनकुशैर्मार्जयेत् ॥ उपयमनकुशानामग्नौ प्रक्षेपः॥ ततः पंचकुम्भाज्जलं गृहीत्वा शिलासु मूलमध्याग्रेषु सिंचयेत्॥ॐ सिञ्चन्तिपरिषिञ्चन्त्युत्सिञ्चन्ति पुनन्ति च॥सुरायै वभ्भ्रैमदे किन्त्वो व्वदति किन्त्वः ॥ इति मंत्रेण ॥ ततो

खातभूमिमुपलिप्याक्षतपुंजेषु ॥ ॐ गणानान्त्वा गणपति६ हवामहे प्रियाणान्त्वा प्रियपति६ हवामहे निधीनान्त्वा निधिपति६ हवामहे वसो मम॥ आहमजानि गर्ब्भधमात्वम जासि गर्ब्भधम्॥ ॐ भू० गणेशाय नमः गणेशं० १ ॐ यस्य कूर्म्मो गृहे हविस्तमग्ने व्वर्द्धया त्वम्॥ तस्मै देवा ऽअधिब्रुवन्न यञ्च ब्रह्मणस्पतिः॥ ॐ कूर्माय नमः कूर्मं०॥ २॥ ॐ नमोस्तु सर्पेभ्यो ये के च पृथिवीमनु॥ येऽअन्तरिक्षे ये दिवि तेभ्यः सर्प्पेभ्यो नमः॥ ॐ भू० शेषाय नमः शेषं० ॥ ३॥ ॐ खड्गो व्वैश्वदेवः श्वाकृष्णः कर्णो गर्द्दभस्तरक्षुस्ते रक्षसामिन्द्राय सूकरः सिꣳहो मारुतः कृकलासः पिप्पका शकुनिस्ते शरव्यायै व्विश्वेषान्देवानाम्पृषतः॥ ॐ भू० वारा-

हाय नमः वाराहं० ॥ ४ ॥ इति संपूज्य ॥ ततः पृथिवी-
पूजनम् ॥ ध्यानम् ॥ कूर्मपृष्ठोपरिस्थितांभो शुक्लवर्णां
चतुर्भुजाम् ॥ सुरूपां पृथिवीं दिव्यां रूपाभरणसंयुताम् ॥
स्त्रीरूपां प्रमादावेव धारिणीं सुमनोहराम् ॥ महा व्याहृति
पूर्वेण पूजयेत्मंत्रपूर्वकम् ॥ ॐ स्योना पृथिवी नो भवा-
न्नृक्षरानिवेशनी ॥ यच्छानः शर्म्म सप्प्रथाः ॥ इति
संप्रार्थ्य ॥ ॐ भूरसि भूमिरस्यदितिरसि विश्वधाया
व्विश्वस्य भुवनस्य धर्त्री ॥ पृथिवीं यच्छ पृथिवींनृꣳह पृथिवी
म्मा हिꣳसीः ॥ इत्यावाहनम् ॥ ॐ महीद्यौः पृथिवी च न ऽइमं
यज्ञं मिमिक्षताम् ॥ पिपृतान्नो भरीमभिः ॥ इत्यासनम् ॥
ॐ पृथिवी च म ऽइन्द्रश्च मेन्तरिक्षञ्च म ऽइंद्रश्च मे द्यौश्च म

ऽइन्द्रश्च मे समाश्च म ऽइंद्रश्च मे नक्षत्राणि च मऽइंद्रश्च मे दिश-
श्च म ऽइंद्रश्च मे यज्ञेन कल्पन्ताम् ॥ इति पाद्यम् ॥ ॐस्योना
पृथिवि नो भवान्नृक्षरा निवेशनी॥ यच्छानः शर्म्मसप्रथाः ॥
इत्यर्घ्यं ॥ ॐ महीद्यौः पृथिवी च नऽइमं यज्ञं मिमिक्षताम् ॥
पिपृतान्नो भरीमभिः इति आचमनम् ॥ ॐ इरावती धेनुमती
हि भूतᳬ सूयवसिनी मन वेदशस्या ॥ व्यस्कभ्ना रोदसी
व्विष्णावे ते दाधर्त्थ पृथिवीमाभितो मयूखैः स्वाहा ॥ इति
स्नानम्॥ ॐ इमम्मे व्वरुण श्रुधी हवमद्या च मृडय ॥ त्वामव
स्युरा चके॥ इति वस्त्रम् ॥ ॐ त्वां गन्धर्वा ऽअखनंस्त्वामि-
न्द्रस्त्वाम्बृहस्पतिः॥ त्वामोषधे सोमो राजा व्विद्वान्न्यक्ष्मादु-
मुच्च्यत ॥ इति गन्धं स० ॥ ॐ अक्षन्नमीमदन्तेत्यक्षतान्

ॐ श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे पार्श्वे नक्षत्राणि रूपमश्विनौ व्यात्तम् ॥ इष्णन्निषाणामुम्म ऽइषाण सर्व लोकम्म ऽइषाण ॥ इति पुष्पम् ॥ ॐ धूरसि धूर्व्व धूर्वन्तं धूर्वतं योऽस्मान्धूर्वति तं धूर्वयं वयं धूर्वामः ॥ देवानामसि वह्नित- मᳫँ सस्नितमं पप्रितमं जुष्टतमन्देवहूतमम् ॥ इति धूपम् ॥ ॐ अग्निर्ज्ज्योतिर्ज्ज्योतिरग्निः स्वाहा सूर्य्यो ज्योति र्ज्ज्योतिः सूर्य्यः स्वाहा ॥ अग्निर्वर्च्चो ज्योतिर्वर्च्चः स्वाहा सूर्य्यो वर्च्चो ज्योतिर्वर्च्चःस्वाहा॥ ज्योतिः सूर्य्यः सूर्य्यो ज्योतिः स्वाहा ॥ इति दीपम् ॥ ॐ नाभ्या ऽआसीदन्तरिक्षᳫँ शीर्ष्णो द्यौः समवर्त्तत ॥ पद्भ्याम्भूमिर्दिशः श्रोत्रात्तथा ल्लोकाँऽ२अकल्पयन् ॥ इति नैवेद्यम् ॥ ॐ शिवो नामासि

स्वधितिस्ते पिता नमस्ते ऽअस्तु मा मा हिꣳसीः ॥ निव-र्त्तयाम्म्यायुषे न्नाद्याय प्प्रजननाय रायस्पोषाय सुप्प्रजा-स्त्वाय सुवीर्य्याय ॥ ओं याः फलिनीर्या ऽअफला ऽअपुष्पा याश्च पुष्पिणीः ॥ बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वꣳहसः ॥ इति पूगीफलताम्बूले समर्पयामि ॥ ॐ हिरण्यगर्भः सम-वर्त्तताग्रे भूतस्य जातः पतिरेक ऽआसीत् ॥ स दाधार पृथिवी न्द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ इति दक्षिणां समर्पयामि ॥ ॐ धामच्छदग्निरिन्द्रो ब्रह्मा देवो बृहस्पतिः ॥ सचेतसो व्विश्श्वेदेवा यज्ञं प्रावन्तु नः शुभे ॥ इति पुष्पांजलिः ॥ ॐ शिवो नामेति नमस्कारः ॥ ॐ शिवो नामासि स्वधितिस्ते पिता नमस्ते ऽअस्तु मा मा हिꣳसीः ॥

निवर्त्तयाम्म्यायुषे न्नाद्याय प्प्रजननाय रायस्प्पोषाय सुप्प्रजास्त्वाय सुवीर्य्याय ॥ इति विशेषार्घः ॥ ताम्रपात्रे गंधदूर्वापुष्पफलयवयुतार्घ्यं गृहीत्वा ॥ आगच्छ सर्व-कल्याणि वसुधे लोकधारिणि ॥ पृथिवि ब्रह्मदत्तासि काश्यपेनाभिवंदिता ॥ उद्धृतासि वराहेण सशैलवनका-नना ॥ गृहं तु कारयाम्यद्य त्वदूर्ध्वे शुभलक्षणम् ॥ गृहा-णार्घ्यं मया दत्तं प्रसन्ना शुभदा भव ॥ इत्यर्घ्यम् ॥ ततो लाजासक्तुभिर्दधिदीपसहितैर्भूम्यै बलिं दत्वा ॥ तद्यथा ॥ पृथिव्यै सांगायै सपरिवारायै सायुधायै सशक्तिकायै नमः ॥ भो पृथिवि देवि लाजासक्तुदधिदीपसहितं बलिं भुंक्ष्व मम सकुटुंबस्य सपरिवारस्य रक्षां कुरु आयुःकर्त्री ऋद्धिकर्त्री

पुष्टिकर्त्रीं क्षेमकर्त्रीं भव ॥ इति बलिं दत्वा प्रार्थयेत् ॥ सर्वबीजसमायुक्ते सर्वरत्नौषधीयुते ॥ पूजिते परमाचार्यैं गंधमाल्यैरलंकृतैः ॥ इष्टं मे त्वम् प्रयच्छध्वं त्वामहं शरणं गतः ॥ पुत्रदारधनायुष्यं धर्मवृद्धिकरी भव ॥ इति संप्रार्थ्य ॥ ततः सुलग्ने वाद्यानि वादयेत् ॥ ततः पूर्वादि क्रमेण दिशायां मध्ये च सूक्ष्मे एतदतिरिक्तशिलोपर्यन्त-तान्दत्वा ॥ तत्र मध्वाज्य-पारद-सुवर्ण-रत्नगर्भ-गंधादिभू-षितकुम्भं स्थापयेत् ॥ ततः पूर्वकुम्भे पद्ममावाह्य संपूज्य दक्षिणकुंभे महापद्ममावाह्य संपूज्य ॥ पश्चिमकुम्भे शंख-मावाह्य संपूज्य ॥ उत्तरकुम्भे विजयमावाह्य संपूज्य मध्यकुम्भे सर्वतोभद्रमावाह्य संपूज्य ॥ ततः कुम्भसमां

मृत्तिकां दत्वा ॥ पूर्वादिक्रमेण नंदादिशिलां स्थापयेत् ॥
नाभिर्म्मे चित्तं व्विज्ञानम्पायुर्म्मे पचति र्भसत् ॥ आनन्द-
नन्दावाण्डौ मे भगः सौभाग्यम्पसः ॥ जङ्घाभ्याम्पद्भ्यां
धर्म्मोस्मि व्विशि राजा प्रतिष्ठितः ॥ ॐ स्थिरो भव
व्वीड्वङ्ग ऽआशुर्भव वाज्यर्वन् ॥ पृथुर्भव सुखदस्त्वमग्नेः
पुरीषवाहणः ॥ इति मंत्राभ्यां पूर्वपद्मकुम्भे नंदां स्थापयेत्पू-
जयेत् ॥ प्रार्थनां कुर्यात् ॥ नन्दे त्वं नन्दिनी पुंसां त्वामत्र
स्थापयाम्यहम् ॥ गृहेव तिष्ठ संहृष्टा यावच्चन्द्रार्कतारकाः ॥
आयुःकामां श्रियं देहि देववासिनि नंदिनि ॥ अस्मि-
न्रत्ता त्वया कार्या न्यासान्देवात्मनो मम ॥ इति संप्रार्थ्य ॥
ततो दक्षिणकुम्भेमहापद्मे भद्रां स्थापयेत् ॥ ॐ भद्रं कर्णे-

भिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः ॥ स्थिरैरङ्गैस्तुष्टुवा ँ सस्तनूभिर्व्यशेमहि देवहितं यदायुः ॥ इति संपूज्य प्रार्थयेत् ॥ भद्रे त्वं सर्वदा भद्रं लोकानां कुरु काश्यपि ॥ आयुर्दा कामदा देवि सुखदा च सदा भव ॥ त्वामत्र स्थापयाम्यत्र गृहेऽस्मिन् भद्रदायिनि ॥ इति संप्रार्थ्य ॥ पश्चिमकुम्भे शंखे जयां स्थापयेत् ॥ ॐ जातवेदसे सुनवामसोमरातीयतो निदहाति वेदः ॥ स नः पर्षदति दुर्गाणि विश्वानावेव सिन्धुन्दुरितात्यग्निः ॥ संपूज्य प्रार्थयेत् ॥ गर्गगोत्रसमुद्भूतां त्रिनेत्रां च चतुर्भुजाम् ॥ गृहेव स्थापयाम्यद्य जयां चारुविलोचनाम् ॥ नित्यं जयाय भूत्यै च स्वामिनो भव भार्गवि ॥ इति संप्रार्थ्य ॥ उत्तरे विजयकुम्भे

रिक्तां स्थापयेत् ॥ ॐ त्र्यम्बकं यजामहे सुगन्धिम्पुष्टिवर्ध-नम् ॥ उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ ॐ इमम्मे वरुण श्रुधी हवमद्या च मृळय ॥ त्वामव स्युरा चके ॥ स्थापयेत्प्रार्थयेत्तद्वद् रिक्तां रिक्तार्तिहारिणीम् ॥ रिक्ते त्वं रिक्तदोषघ्ने सिद्धिबुद्धिप्रदे शुभे ॥ सर्वदोषघ्नि तिष्ठास्मिन्नरप्रसादात्रिनंदिनि ॥ इति संप्रार्थ्य ॥ ततो मध्यकुम्भे सर्वतोभद्रे पूर्णां स्थापयेत् ॥ ॐ पूर्णादर्व्वि परा-पत सुपूर्णा पुनरापत ॥ व्वस्नेव व्विक्रीणावहा ऽइषमूर्ज्जं शतक्रतोः ॥ इति मंत्रेण स्थाप्य संपूज्य प्रार्थयेत् ॥ पूर्णे त्वं सर्वदा पूर्णां लोकानां कुरु काश्यपि ॥ आयुर्दा कामदा देवि धनदा सुतदा तथा ॥ गृहाधारा वास्तुमयो वास्तुदी-

पेन संयुता ॥ त्वामृते नास्ति जगतामाधारं जगत्प्रिये ॥
इति प्रार्थ्य ॥ ततः आग्नेयां शंकुं शेषयेत् ॥ विशंतु भूतले
नागा लोकपालाश्च सर्वतः ॥ अस्मिन्गृहेव तिष्ठन्तु आयु-
र्बलकराः सदा ॥ परितो लोकपालान्सम्पूज्य ॥ ॐ त्रातार-
मिन्द्रमवितारमिन्द्रꣳ हवे हवे सुहवꣳ शूरमिन्द्रम् ॥ ह्वयामि
शक्रं पुरुहूतमिन्द्रꣳ स्वस्ति नो मघवा धात्विन्द्रः ॥ इन्द्राय
नमः ॥ इन्द्रमा० ॥ ॐ त्वन्नो ऽअग्ने तव पायुभिर्मघोनो
रक्षतन्न्वश्च वन्द्य ॥ त्राता तोकस्य तनये गवामस्य
निमेषꣳ रक्षमाणस्तव व्रते ॥ अग्नये नमः अग्निमा० ॥
॥२॥ ॐ यमाय त्वाङ्गिरस्वते पितृमते स्वाहा ॥ स्वाहा
घर्माय स्वाहा घर्मः पित्रे ॥ यमाय नमः यममा० ॥ ३ ॥

ॐ असुन्वन्तमयजमानमिच्छस्तेन स्येत्यामन्विहि तस्क-
रस्य ॥ अन्यमस्मादिच्छसात ऽइत्या नमो देवि निर्ऋते
तुभ्यमस्तु ॥ निर्ऋतये नमः निर्ऋतिमा० ॥ ४ ॥ ॐ
तत्वायामि ब्रह्मणा वन्दमानस्तदाशास्ते यजमानो हविर्भिः ॥
अहेळमानो वरुणे हवोध्युरुशꣳ समान ऽआयुः प्रमोषीः ॥
वरुणाय नमः । वरुणमा० ॥ ५ ॥ आनोनियुद्भिः शतिनी-
भिरध्वरꣳ सहस्रिणीभिरुपयाहि यज्ञम् ॥ वायोऽअस्मिन्त्स-
वने मादयस्व यूयम्पात स्वस्तिभिः सदा नः ॥ वायवे नमः
वायुमा० ॥ ६ ॥

ॐ वयꣳ सोम व्रते तव मनस्तनूषु विभ्रतः ॥
प्रजावन्तः सचेमहि ॥ सोमाय० सोमं ॥ ७ ॥ ॐ तमी-

शानं जगतस्तस्थुषस्पतिन्धियं जिन्वमवसे हूमहे व्वयम् ॥ पूषानो यथाव्वेदसामसद्वृधे रक्षितापायुरदब्धः स्वस्तये ॥ ईशानाय नमः ॥ ईशानं० ॥ ८ ॥ ॐ अस्मे रुद्रामेहना- पर्व्वतासो वृत्रहत्ये भरहूतौ स योषाः ॥ यः शꣳ सते स्तुवते धायिपज्रऽइन्द्रज्येष्ठा ऽअस्मां ऽअवन्तु देवाः ॥ ब्रह्मणे नमः ब्रह्माणं० ॥ ९ ॥ ॐ स्योना पृथिवि नो भवान्नृक्षरानिवे- शनि ॥ यच्छानः शर्म्मसप्रथाः ॥ अनन्ताय० अनन्तं० ॥ १० ॥ ततो नंदादिभ्यो लाजादिबलिं दद्यात् ॥ नंदा- दिभ्यो इमांल्लाजादिबलिं समर्पयामि ॥ ततो लोकपा- लेभ्यो दधिमाषबलिं दद्यात् ॥ इन्द्रादिदशदिक्पालेभ्यो दधिमाषबलिं समर्पयामि ॥ ततो विश्वकर्माणां पूजयेत् ॥

ॐ व्विश्वकर्मन्हविषा व्वर्द्धनेन त्रातारमिन्द्रमकृणोरवद्ध्यम्॥
तस्म्मै व्विशः समनमन्तपूर्वीरयमुग्रो व्विहव्यो यथा सत् ॥
विश्वकर्मणे नमः इति संपूज्य प्रार्थयेत् ॥ अज्ञानात्
ज्ञानतो वापि दोषाः स्युश्च यतोद्भवाः ॥ नाशय त्वं तु
तान्सर्वान्विश्वकर्मन्नमोऽस्तु ते ॥ इति ॥ अथायुधगजखनि-
त्रेत्यादिपूजां कृत्वा प्रार्थयेत् ॥ त्वष्ट्रा विनिर्मितं पूर्वं लोकानां
हितकाम्यया ॥ पूजितोऽसि खनित्र त्वं सिद्धिष्टेभवदोऽधुना ॥
इत्यायुधप्रार्थना ॥ ततोऽऽचार्याय सवत्सां स्वर्णयुतां गां
तथा वासोयुगान्वितां दद्यात् ॥ तत्र संकल्पः ॥ देशकालौ
संकीर्त्य गोत्रः शर्माहं कृतैतच्छिलान्यासकर्मणः सांगता-
सिध्यथ इमां गां सवत्सां रुद्रदैवत्यां सुवर्णमग्निदैवत्यां वासो-

युगां बृहस्पतिदैवत्यां अमुकगोत्रायामुकशर्मणे आचार्याय तुभ्यमहं संप्रददे ॥ कृतैतत्सोपस्करसवत्सगोदानकर्मणः सांगतासिध्यर्थं दक्षिणाद्रव्यं अमुकगोत्रायामुकशर्मणे आचार्याय तुभ्यमहं संप्रददे ॥ ततः प्रधानपीठाद्याचार्याय तुभ्यमहं संप्रददे ॥ कृतैतच्छिलान्यासकर्मणः सांगतासिध्यर्थं ब्रह्मादिऋत्विग्भ्यो दक्षिणां दातुमहमुत्सृजे ॥ कृतैतच्छिलान्यासकर्मणः सांगतासिध्यर्थं यथासंख्याकान्ब्राह्मणान्भोजयिष्ये ॥ कृतैतच्छिलान्यासकर्मणः तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थं नानां गोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां दातुमहमुत्सृजे ॥ ततो देवताग्निं विसृज्य ॥ ॐ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वे महे ॥ उप प्रयन्तु

मरुतः सुदानव ऽइन्द्रमाशूर्भवासना ॥ यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ इति देवविसर्जनम् ॥ ॐ यज्ञ यज्ञङ्गच्छ यज्ञपतिङ्गच्छ स्वां योनिं गच्छ स्वाहा ॥ एष ते यज्ञो यज्ञपते सह सूक्तवाकः सर्ववीरस्तञ्जुषस्व स्वाहा ॥ गच्छ गच्छ सुरश्रेष्ठ स्वस्थानं परमेश्वर ॥ यत्र ब्रह्मादयो देवास्तत्र गच्छ हुताशन ॥ इत्यग्निविसर्जनम् ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं संपूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ ॐ विष्णवे नमः ॥ इति त्रिर्जपेत् ॥ ततः तिलकाशीर्वादः ॥ श्रीर्वर्चस्वमायुष्य-

मायुरोग्यमाविधात्पवमानं महीयते ॥ धान्यं धनं पशुं बहुपुत्रलाभं शतसंवत्सरं दीर्घमायुः ॥ मंत्रार्थाः सफलाः सन्तु पूर्णाः सन्तु मनोरथाः ॥ शत्रूणां बुद्धिनाशोऽस्तु मित्राणामुदयस्तव ॥ यज्ञान्ते ब्राह्मणान्भोजयित्वा सुहृन्मित्रादियुतो भुञ्जीतेति ॥ इति शिलान्यासपद्धतिः समाप्ता ॥

( मात्स्योक्तं ) स्तम्भोच्छ्राये शिलान्यासे सूत्रयोजनकीलके । खनने वास्तुसंस्कारे प्रारम्भो वह्निगोचरे आग्नेय्यां प्रारभ्येत्यर्थः ॥ आग्नेय्यामेव शिलास्थापने विधिकुम्भगर्भे स्थाप्या तेषामुपघातो न भवति तेन प्रकारेण शिलानां स्थापनं इति नूतनगृहे शिलान्यासविधिः ॥ सूत्रमिति शिलान्यासं स्तम्भस्यारोपणं तथा ॥ पूर्वदक्षिणयोर्मध्ये

कुर्यादित्याह कश्यपः ॥ शिलाप्रमाणं क्रमशः प्रदिष्टं वर्णा-
नुपूर्वेण तथांगुलानाम् ॥ अथैकविंशं २१ घन १७ विश्व १३
नंदा ९ विस्तारके व्यासमितं तदर्धम् ॥ मानं प्रदिष्टं त्वथ
पिंडिका स्यान्न चाधिका न्यूनतरा न कार्या । प्रमाणहीना
सुतनाशकारिणी व्यंगाऽव्ययं भ्रष्टविवर्णदेहा ॥

| ब्राह्मणके लिये शिला | क्षत्रियके लिये शिला | वैश्यके लिये शिला | शूद्रके लिये शिला |
|---|---|---|---|
| लंबा २१ अंगुल | लंबा १७ अंगुल | लंबा १३ अंगुल | लंबा ९ अंगुल |
| चौड़ा १०॥ अंगुल | चौड़ा ८॥ अंगुल | चौड़ा ६॥ अंगुल | चौड़ा ४॥ अंगुल |
| ऊँचा ५। अंगुल | ऊँचा ४। अंगुल | ऊँचा ३। अंगुल | ऊँचा २। अंगुल |

पाषाणगेहे कर्तव्या शिलापाषाणसंभवा । शैलजे शैलजः
पीठश्चैष्टके चैष्टकः स्मृतः ॥ पक्वेष्टकानिर्मिते तु इष्टकानां च
कारयेत् ॥ इष्टकानिर्मिते गेहे प्रमाणमिह कल्पय ॥ अपरेषां

गृहाग्रान्तु शिलामानं न चिंतयेत् ॥ आधारभूता तु शिला प्रकल्प्या दृढा मनोज्ञा परिमाणयुक्ता । सल्लक्षणा चापरिमाणमाना न चाधिका न्यूनतरा न कृष्णा ॥ ध्रुवे शिला पातनतः खनित्वा कुंभं प्रतिष्ठाप्य शरांगुलीयम् ॥ विप्रादिवर्णानुगतः प्रशस्तस्तदर्धमानं तु तदर्धमानम् ॥ ( खननप्रकारः ) ऐन्द्रेशिरोभाद्रपदादिमासे याम्ये तथा मार्गशीर्ष त्रयेण ॥ फाल्गुणयमासे दिशि पश्चिमायां ज्येष्ठादिमासेऽपि शिरोत्तरेषु ॥ ऊर्ध्वभागं त्रयं त्यक्त्वाऽधोभागे च द्वयं तथा ॥ मध्ये नाभिं विजानीयादिति प्राह पराशरः । ( फलम् ) शिरः खनेत्स्वामिगृहे च मृत्युः खनेत्पदं तुष्टि तथाभयञ्च ॥ पुच्छं खनेद्व्याधि वियोगतायं कुक्षौ च पुत्रासिधनादिलाभः ॥

(शंकुप्रमाणम्) शंकुः स्याच्चतुर्विंशाष्टद्वादशांगुलकैः क्रमात् ॥ विप्रादीनां शंकुमानं स्वर्णवर्णाद्यलङ्कृतम् ॥ शंकुं त्रिधा विभज्याद्यं चतुरस्रं ततः परम् ॥ अष्टास्रं च तृतीयांशमनस्रमृजुमव्रणम् ॥ इति शंकुप्रमाणम् ॥

## अथ देहलीन्यासपद्धतिः ।

श्रीगणेशाय नमः ॥ देहलीन्यासं तु शिलान्यासवत्कुर्यात् । तत्र विशेषः ॥ कर्ता शुभेह्नि चन्द्रताराबलान्विते पूर्वाह्णे सपत्नीकः स्वाचान्तः शुचिः प्राङ्मुखः शुद्धासने उपविश्य अपवित्रः पवित्रो वा सर्वावस्थां गतोऽपि वा ॥ यः स्मरेत्पुण्डरीकाक्षं स बाह्याभ्यन्तरः शुचिः ॥ इत्यात्मानं

पूजासामग्रीं च संप्रोक्ष्य ॥ ॐ पवित्रेस्थो वैष्णव्यौ सवितुर्वः प्रसव ऽउत्पुनाम्यच्छिद्रेण पवित्रेण सूर्यस्य रश्मिभिः ॥ तस्य ते पवित्रपते पवित्रपूतस्य यत्कामः पुनेतच्छकेयम् ॥ इति कुशपवित्रधारणम् ॥ आचम्य प्राणानायम्य ॥ देश-कालौ संकीर्त्य० अमुकगोत्रः अमुकशर्मा सपत्नीकोऽहं मम सकुटुम्बस्य सपरिवारस्य सर्वारिष्टप्रशांतिपूर्वकायुरारोग्यै-श्वर्याभिवृद्ध्यर्थं एतद्गृहेऽनवच्छिन्नभूम्यधिष्ठितदेवतोपरो-धाजनितोपसर्गनिवृत्तये गृहाधिष्ठितवास्तुपुरुषप्रीतये च वास्तुपूजनपूर्वकं देहलीन्यासं करिष्ये ॥ तदङ्गत्वेन स्वस्ति-पुण्याहवाचनं मातृकापूजनं वसोर्द्धारापूजनं आयुष्यमंत्र-जपं नांदीश्राद्धं आचार्यादिवरणानि च करिष्ये ॥ तत्रादौ

निर्विघ्नतासिद्ध्यर्थं गणेशाम्बिकयोः पूजनं च करिष्ये ॥ गणेशपूजनादारभ्य आचार्यवरणान्तं कर्म ग्रहशान्त्यनुसारेण कुर्यात् ॥ ततः कलशस्थापनविधिना कलशं प्रतिष्ठाप्य संपूज्य प्रार्थयेत् ॥ सर्वे समुद्रेत्यादि पठेत् ॥ कलशोपरि वास्तुप्रतिमां संस्थाप्य ॥ ॐ वास्तोष्पते प्रतिजानीह्यस्मान्स्वावेशो अनमीवो भवानः ॥ यत्वेमहे प्रतितन्नो जुषस्व शन्नो भव द्विपदे शं चतुष्पदे ॥ इति मंत्रेण संपूज्य प्रार्थयेत् ॥ सर्वदेवमयं वास्तु सर्वदेवमयं परम् ॥ सर्वदेवमयं ब्रह्म तस्मै वास्तोष्पतये नमः ॥ ततः सदीपदधिमाषबलिं दद्यात् ॥ देहलीवास्तवे सांगाय सपरिवाराय सायुधाय सशक्तिकाय एतां सदीपदधिमाषबलिं समर्पयामि ॥ ततो

देहलीशाखयोः तीर्थोदकेन प्रक्षालयेत् ॥ ॐ ये तीर्थानि प्रचरन्ति सृकाहस्तानिषङ्गिणः । तेषाꣳ सहस्रयोजनेव धन्वानि तन्मसि ॥ इति मंत्रेण । ॐ पयः पृथिव्यां पय ऽओषधीषु पयो दिव्यन्तरिक्षे पयोधाः । पयस्वतीः प्रदिशः सन्तु मह्यम् ॥ इति पयसा ॥ ॐ दधिक्राव्णोऽअकारिषञ्जिष्णोरश्वस्य व्वाजिनः ॥ सुरभिनो मुखाकरत्प्रणऽआयूꣳषि तारिषत् ॥ इति दध्ना ॥ ॐ घृतम्मिमिक्षे घृतमस्य योनिर्घृतेश्रितो घृतम्वस्य धाम ॥ अनुष्वधमावहमादयस्व स्वाहा कृतं वृषभव्वक्षिहव्यम् ॥ इति घृतेन ॥ ॐ मधुव्वाता ऽऋतायते मधु क्षरन्ति सिन्धवः ॥ माध्वीर्नः सन्त्वोषधीः ॥ १ ॥ मधुनक्तमुतोषसो मधुमत्पार्थिवꣳ रजः

मधु द्यौरस्तु नः पिता ॥ २ ॥ मधुमान्नो व्वनस्पतिर्म्मधुमाँ ऽअस्तु सूर्य्यः ॥ माध्वीर्गावो भवन्तु नः ॥ ३ ॥ इति मधुना ॥ ॐ अपा ᳪं रसमुद्वयसᳪं सूर्य्ये सन्तᳪं समाहितम् ॥ अपाᳪंरसस्य यो रसस्तं व्वो गृह्णाम्युत्तममुपयामगृहीतोसीन्द्रायत्वाजुष्टं गृह्णाम्येष ते योनिरिन्द्राय त्वा जुष्टतमम् ॥ इति शर्करया स्नापयेत् ॥ इति पंचामृतस्नानम् ॥ गायत्र्या गोमूत्रेण ॥ ॐ गंधद्वारां दुराधर्षां नित्यपुष्टां करीषिणीम् ॥ ईश्वरीं सर्वभूतानां तामिहोपह्वये श्रियम् ॥ इति गोमयेन ॥ ॐ आप्यायस्व समेतु ते व्विश्वतः सोमवृष्ण्यम् ॥ भवाव्वाजस्य सङ्गथे ॥ इति पयसा ॥ ॐ दधिक्राव्णा इति दध्ना ॥ ॐ तेजोसि शुक्रमस्यमृतमसि

धाम नामासि । प्रियं देवानामनाधृष्टं देवयजनमसि ॥ इत्याज्येन स्नापयेत् ॥ ॐ याऽ ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगम्पुरा मनैनु बभ्रूणामहꣳ शतं धामानि सप्त च ॥ इति सर्वौषधीभिः ॥ ॐ त्वां गन्धर्वा ऽअखनँस्त्वामिन्द्रस्त्वां बृहस्पतिः ॥ त्वामोषधे सोमो राजा विद्वान्यक्ष्मादमुच्यत इति गंधोदकेन स्नापयेत् ॥ ॐ हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक ऽआसीत् । सदाधार पृथिवीन्द्यामुतेमां कस्मै देवाय हविषा विधेम ॥ इति हिरण्योदकेन ॥ ॐ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्याम्पूष्णो हस्ताभ्याम् इति शुद्धोदकेन ॥ ततः शास्त्रादि कुंकुमादिनानुलिप्य पूजयेत् ॥ तत्रायं क्रमः ॥ पूर्वाभिमुखद्वारे देवता-

नामानि ॥ दक्षिणशाखायां विधात्रे नमः ॥ वामशाखायां धात्रे नमः ॥ देहल्यां श्रियै नमः ॥ ऊर्ध्वं गणेशाय नमः ॥ अधः वास्तुपुरुषाय नमः ॥ अथ दक्षिणाभिमुखद्वारे देवतानामानि ॥ दक्षिणशाखायां सबलाय नमः । वामशाखायां बलाय नमः ॥ द्वारदेहल्यां श्रियै नमः ॥ ऊर्ध्वं गणपतये नमः ॥ अधः वास्तुपुरुषाय नमः ॥ अथ पश्चिमाभिमुखद्वारे देवतानामानि ॥ दक्षिणशाखायां विजयाय नमः । वामशाखायां जयाय नमः ॥ द्वारदेहल्यां श्रियै नमः ॥ ऊर्ध्वं गणपतये नमः ॥ अधः वास्तुपुरुषाय नमः ॥ अथोत्तराभिमुखद्वारे देवतानामानि ॥ दक्षिणशाखायां प्रचण्डाय नमः ॥ वामशाखायां चण्डाय नमः ॥ द्वारदेहल्यां श्रियै

नमः ॥ ऊर्ध्वं गणपतये नमः ॥ अधः वास्तुपुरुषाय नमः ॥ तत्र तेभ्यः सदीपदधिमाषबलिं दत्वा वस्त्रेणाच्छाद्य किंचित्कालं स्थित्वा वस्त्रोद्वासनं कृत्वा । ततः स्वस्तिवाचनं पठित्वा । ततो देहलीस्थाने मध्ये किंचित् खातं खनयित्वा गर्तं पंचगव्येन पंचामृतेन वा संप्रोक्ष्य । तत्र ॐ स्योना पृथिवि नो भवान्नृक्षरानिवेशनी यच्छानः शर्म सप्रथाः ॥ इति मंत्रेण भूमिं संपूज्य प्रार्थयेत् ॥ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि ॥ उद्धृतासि वराहेण सशैलवनकानना ॥ सशैलसागरां पृथिवीं यथा वहसि मूर्द्धनि ॥ तथा मां वह कल्याणं संपत्संततिभिः सह ॥ इति संप्रार्थ्य ॥ गर्ते पारदं पञ्च रत्नानि च निक्षिप्य गर्ते देहलीवास्तुं संस्थाप्य तस्यो-

परि देहलीं न्यसेत् ॥ ॐ स्थिरोभव विड्वङ्ग आशुर्भव वाज्ज्यर्वन् ॥ पृथुर्भव सुखदस्त्वमग्नेः पुरीषवाहनः इति मंत्रेण ॥ ततो द्वारशाखां संस्थाप्य पूर्वादिद्वारदेवतानामभिः संपूज्य तेभ्यः सदीपदधिमाषबलिं दत्वा ॥ उपरिशाखायां मध्यदेशे लौहमुद्रिकाहरिद्राखण्ड पीतसर्षपकपर्दिके पीतवस्त्रेणपोटलिकां कृत्वा । ॐ यदा बध्नं दाक्षायणा हिरण्यꣳ शतानीकाय सुमनस्य मानाः ॥ तन्म ऽआबध्नामि शत-शारदायायुष्माञ्जरदाष्टिर्यथासम् इति बध्नीयात् ॥ ततः पुष्पमालादिभिरलंकृत्य प्रार्थयेत्॥ प्रार्थयामित्यहं देवशालाया अधिपस्तु यः ॥ प्रायश्चित्तप्रसंगेन ग्रहार्थे यन्मया कृतम् ॥ १ ॥ मूलच्छेदं तृणच्छेदं कृमिकीटनिपातितम् ॥ हननं

जलजीवानां भूमौ शस्त्रेण घातनम् ॥ २ ॥ अनृतं भाषणं तच्च किंचिद्वृत्तस्य पातनम् ॥ एतत्सर्वं क्षमस्वेमां यत्करिष्यामि दुष्कृतम् ॥ ३ ॥ गृहार्थे यत्कृतं पापं अज्ञानेनाथ चेतसा ॥ तत्सर्वं क्षम्यतां देव गृहशालां शुभां कुरु ॥ ४ ॥ इति संप्रार्थ्य आचार्यादिभ्यो ब्राह्मणेभ्यो दक्षिणां दत्वा ॥ तद्यथा ॥ कृतैतद्देहलीन्यासकर्मणः सांगतासिध्यर्थं गोनिष्क्रयभूतं द्रव्यं अमुकगोत्रायामुकशर्मणे आचार्याय दातुमहमुत्सृजे कृतैतद्देहलीन्यासकर्मणः सांगतासिध्यर्थं आचार्यादिभ्यो ब्राह्मणेभ्यो दक्षिणां दातुमहमुत्सृजे ॥ कृतैतद्देहली न्यासकर्मणः सांगतासिध्यर्थं तन्मध्ये न्यूनातिरिक्तदोषपरिहारार्थं नानानां गोत्रेभ्यो ब्राह्मणेभ्यो भूयसीं दक्षिणां

विभज्य दातुमहमुत्सृजे ( केचित्तु स्थापितदेवानां नाममं-
त्रेण हवनं कुर्वन्ति अग्निस्थापनाद्यारभ्य पूर्णाहुतिविमोकांत
कर्म कृत्वा आचार्यादिभ्यो ब्राह्मणेभ्यो दक्षिणांदद्यात् इति
कृताकृतम् ) अथाभिषेकः ।। ॐ देवस्य त्वा सवितुः प्रसवे-
ऽश्विनो र्बाहुभ्यां पूष्णो हस्ताभ्याम् ।। सरस्वत्यै वाचो
यंतुर्यंत्रिये दधामि बृहस्पते ष्ट्वा साम्राज्येनाभिषिञ्चाम्यसौ ।।
देवस्य त्वा० ।। सरस्वत्यै वाचो यंतुर्यंत्रेणाग्नेः साम्राज्येना-
भिषिंचामि ।। देवस्य त्वा० ।। अश्विनोर्भैषज्येन तेजसे
ब्रह्मवर्चसायाभिषिञ्चामि सरस्वत्यै भैषज्येन वीर्याया न्नाद्या-
याभिषिंचामीन्द्रस्येन्द्रियेण बलाय श्रियै यशसेऽभिषिंचामि।।
अथ विसर्जनम्।।उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे। उप

प्रयन्तु मरुतः सुदानव ऽइन्द्रप्राशुर्भवासचा ॥ यान्तु देवगणाः सर्वे पूजामादाय मामकीम् ॥ इष्टकामसमृद्ध्यर्थं पुनरागमनाय च ॥ प्रार्थना ॥ प्रमादात्कुर्वतां कर्म प्रच्यवेताध्वरेषु यत् ॥ स्मरणादेव तद्विष्णोः संपूर्णं स्यादिति श्रुतिः ॥ यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ॥ न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ विष्णवे नमः । विष्णवे नमः । विष्णवे नमः ॥ इति श्रीवायुनन्दन मिश्र विरचिता देहलीन्यास पद्धति समाप्ता ॥

पुस्तक प्राप्ति स्थान—

मास्टर खेलाड़ीलाल ऐण्ड सन्स,

संस्कृत बुकडिपो, कचौड़ीगली, बनारस सिटी ।

मुद्रक—एन० पी० यादव, मास्टर प्रिण्टिङ्ग वर्क्स, बनारस सिटी ।

